त्वयानिवारिताःकस्माद्धयमाभ्युदये परे । तेषांतद्वचनंश्रुत्वाकेशवोमाक्यमब्रवीत्
चण्डीमुद्दिश्य प्रमथानन्यांश्चैव तथाविधान् ।
यूयं चैव मया प्रोक्ता मा कोपं कर्त्तुमर्हथ ॥ ३६ ॥
एवमुक्तास्तदातेन चण्डीमुख्या गणास्तदा ।
एकान्तमाश्रिताः सर्वे विष्णुवाक्याज्ज्वलद्धृदः ॥ ३७ ॥
तावत्सर्वे समायाताःपर्वतेन्द्रस्यमन्त्रिणः । सकलत्राःसम्भ्रमेणमहेशंप्रतिसत्वरम्
पञ्चवाद्यप्रघोषेण ब्रह्मघोषेण भूयसा । योषिद्भिः सम्भृतास्तत्र गीतशब्देन भूयसा
एवं प्राप्ता यत्र शम्भुः सकलैः परिवारितः ।
आगत्य कलशैः साकं स्नापितो हि सदाशिवः ॥
स्त्रीभिर्मङ्गलगीतेन सर्वाभरणभूषितः ॥ ४० ॥
ऋषयोदेवगन्धर्वास्तथान्येपर्वतोत्तमाः । शम्भ्वग्रगास्ताजग्मुःस्त्रियश्चैवसुपूजिताः
बभौ छत्रेण महता ध्रियमाणेन मूर्द्धनि ॥ ४१ ॥
चामरैर्वीज्यमानोऽसौ मुकुटेन विराजितः ।
ब्रह्माविष्णुस्तथाचन्द्रो लोकपालास्तथैव च ॥ ४२ ॥
अग्रगा ह्यपि शोभन्तः श्रियापरमयायुताः । तथाशङ्खाश्च भेर्यश्चपटहानकगोमुखाः
तथैवगायकाः सर्वे जग्मुः परममङ्गलम् । पुनः पुनरवाद्यन्त वादित्राणि महोत्सवे
अरुन्धतीमहाभागाअनसूयातथैवच । साबित्रीचतथालक्ष्मीमातृभिःपरिवारिताः
एभिः समेतो जगदेकबन्धुर्बभौ तदानीं परमेण वर्च्चसा ।
स चन्द्रसूर्यानिलवायुना वृतः सलोकपालप्रवरैर्महर्षिभिः ॥ ४६ ॥
स वीज्यमानः पवनेन साक्षाच्छत्रं च तस्मै शशिना ह्यधिष्ठितम् ।
सूर्यः पुरस्तादभवत्प्रकाशकः श्रियान्वितो विष्णुरभूच्च सन्निधौ ॥ ४७
पुष्पैर्ववर्षुर्ह्यवकीर्यमाणा देवास्तदानीं मुनिभिः समेताः ।
ययौ गृहं काञ्चनकुट्टिमं महन्महाविभूत्या परिशोभितं तदा ॥
विवेश शम्भुः परया सपर्यया सम्पूज्यमानो नरदेवदानवैः ॥ ४८ ॥



एवं समागतःशम्भुः प्रविष्टो यज्ञमण्डपम् । संस्तूयमानोविबुधैःस्तुतिभिःपरमेश्वरः
गजादुत्तारयामास महेशं पर्वतोत्तमः । उपविश्य ततः पीठे कृत्वा नीराजनं महत्
मेनया सखिभिः साकं तथैव च पुरोधसा । मधुपर्कादिकंसर्वं यत्कृतं चैव तत्र वै
ब्रह्मणा नोदितः सद्यः पुरोधाः कृतवान्प्रभुः ।
मङ्गलं शुभकल्याणं प्रस्तावसदृशं बहु ॥ ५२ ॥
अन्तर्वेद्यां सम्प्रवेश्ययत्रसापार्वतीस्थिता । वेदिकोपरितन्वङ्गीसर्वाभरणभूषिता
तत्रानीतोहरः साक्षाद्विष्णुना ब्रह्मणा सह ।
लग्नं निरीक्षमाणास्ते वाचस्पतिपुरोगमाः ॥ ५४ ॥
गर्गो मुनिश्चोपविष्टस्तत्रैव घटिकालये । यावत्पूर्णाघटीजातातावत्प्रणवभाषणम्
ॐपुण्येति प्रणिगदन्गर्गोबध्वञ्जलिं दधे । पार्वत्यक्षतपूर्णं च शिवोपरि ववर्ष वै
तया सम्पूजितो रुद्रो दध्यक्षतकुशादिभिः । मुदापरमयायुक्तापार्वतीरुचिरानना
विलोकयन्ती शम्भुं तं यदर्थे परमंतपः । कृतं पुरा महादेव्या परेषां परमं महान्
तपसा तेन सम्प्राप्तो जगज्जीवनजीवनः । नारदेन ततः प्रोक्तो महादेवो वृषभध्वजः
तथा गङ्गादिभिश्चान्यैर्मुनिभिः सनकादिभिः ।
प्रतिपूजां कुरु क्षिप्रं पार्वत्याश्च त्रिलोचन !॥
तदा शिवेन सा तन्वी पूजितार्घ्याक्षतादिभिः ॥ ६० ॥
एवं परस्परं तौ च पार्वतीपरमेश्वरौ । अर्च्यमानौ तदानीं च शुशुभाते जगन्मयौ
त्रैलोक्यलक्ष्म्या सम्वीतौ निरीक्षन्तौ परस्परम् ।
तदा नीराजितौ लक्ष्म्या सावित्र्या च विशेषतः ॥
अरुन्धत्या तदा तौ च दम्पती परमेश्वरौ ॥ ६२ ॥
अनसूया तथा शम्भुं पार्वतीं च यशस्विनीम् ।
दृष्ट्वा नीराजयामास प्रीत्युत्कलितलोचना ॥ ६३ ॥
तथैव सर्वा द्विजयोषितश्च नीराजयामासुरहो पुनःपुनः ।
सतीं च शम्भुञ्च विलोकयंत्यस्तथैव सर्वा मुदिता हसन्त्यः ॥ ६४ ॥

लोमश उवाच

एतस्मिन्नन्तरे तत्र गर्गाचार्यप्रणोदितः । हिमवान्मेनया सार्द्धं कन्यांदातुं प्रचक्रमे हैमं कलसमादाय मेनाचार्द्धाङ्गमाश्रिता । हिमाद्रेश्च महाभागासर्वाभरणभूषिता

तदा हिमाद्रिणा प्रोक्तो विश्वनाथो वरप्रदः ।
ब्रह्मणा सह सङ्गत्य विष्णुना च तथैव च ॥ ६७ ॥

सार्द्धंपुरोधसा चैव गर्गेण सुमहात्मना । कन्यादानं करोम्यद्य देवदेवस्य शूलिनः प्रयोगो भण्यतां ब्रह्मन्नस्मिन्समय आगते । अथेतिमत्वातेसर्वेकालज्ञा द्विजसत्तमाः कथ्यतांतात! गोत्रंस्वंकुलं चैवविशेषतः । कथयस्वमहाभागइत्याकर्ण्यवचस्तथा

सुमुखो विमुखः सद्यो ह्यशोच्यः शोच्यतां गतः ॥ ७० ॥
एवंविधः सुरवरैर्ऋषिभिस्तदानीं गन्धर्वयक्षमुनिसिद्धगणैस्तथैव ।
दृष्टो निरुत्तरमुखो भगवान्महेशो हास्यं चकार सुभृशं त्वथनारदश्च ॥
वीणां प्रकटयामास ब्रह्मपुत्रोऽथ नारदः ।
तदानीं वारितो धीमान्वीणां मा वादय प्रभो ! ॥ ७२ ॥
इत्युक्तः पर्वतेनैव नारदो वाक्यमब्रवीत् ।
त्वया पृष्टो भवःसाक्षात्स्वगोत्रकथनंप्रति ॥ ७३ ॥

अस्य गोत्रं कुलं चैवनादएवपरं गिरे । नादे प्रतिष्ठितःशम्भुर्नादोह्यस्मिन्प्रतिष्ठितः

तस्मान्नादमयः शम्भुर्नादाच्च प्रतिलभ्यते ।
तस्माद्वीणा मया चाद्य वादिता हि परंतप !॥ ७५ ॥
अस्य गोत्रं कुलंनाम न जानन्ति हि पर्वत !।
ब्रह्मादयो हि विबुधा अन्येषां चैव काकथा ॥ ७६ ॥
त्वं हि मूढत्वमापन्नो न जानासि हि किञ्चन ।
वाच्यावाच्यं महेशस्य विषया हि बहिर्मुखाः ॥ ७७ ॥

येये आगमिकाश्चाद्रे नष्टास्तेनात्रसंशयः । अरूपोऽयंविरूपाक्षोह्यकुलीनोऽयमुच्यते

अगोत्रोऽयं गिरिश्रेष्ठ जामाता ते न संशयः ।



न कर्त्तव्योविमर्शोऽत्रभवता विबुधेनहि ॥ ७९ ॥
न जानन्ति हरं सर्वे किं बहूक्त्या मम प्रभो !।
यस्याज्ञानान्महाभागमोहिताऋषयोह्यमी ॥ ८० ॥
ब्रह्माऽपि तं न जानाति मस्तकं परमेष्ठिनः ।
विष्णुर्गतो हि पातालं न दृष्टो हि तथैव च ॥ ८१ ॥

तेनलिङ्गेन महता ह्यगाधेनजगत्त्रयम् । व्याप्तमस्तीतितद्विद्धि किमनेनप्रयोजनम् अनयाऽराधितं नूनंतव पुत्र्याहिमालय! । तत्त्वतो हि नजानासिकथंचैवमहागिरे

आभ्यामुत्पाद्यते विश्वमाभ्यां चैव प्रतिष्ठितम् ।
एतच्छ्रुत्वा वचस्तस्य नारदस्य महात्मनः ॥ ८४ ॥
हिमाद्रिप्रमुखाः सर्वे तथा चेन्द्रपुरोगमाः ।
साधुसाध्विति ते सर्वेऊचुर्विस्मितमानसाः ॥ ८५ ॥
ईश्वरस्य तु गाम्भीर्यं ज्ञात्वा सर्वे विचक्षणाः ।
विस्मयेन समाश्लिष्टा ऊचुः सर्वे परस्परम् ॥ ८६ ॥

ऋषय ऊचुः

यस्याऽऽज्ञया जगदिदं च विशालमेव जातं परात्परमिदं निजबोधरूपम् ।
सर्वं स्वतन्त्रपरमेश्वरभावगम्यं सोऽसौ त्रिलोकनिजरूपयुतो महात्मा ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमेमाहेश्वरखण्डे केदारखण्डे शिवशास्त्रे शिवपार्वतीविवाहवर्णनंनाम पञ्चविंशोऽध्यायः ॥ २५ ॥

---

# षड्विंशोऽध्यायः

## ब्रह्मणो वाक्याद्धिमालयकृतकन्यादानवर्णनम्

लोमश उवाच

अथ ते पर्वतश्रेष्ठ मेर्वाद्या जातसम्भ्रमाः । ऊचुस्तेवैकपद्येन हिमवन्तं महागिरिम् ॥

पर्वता ऊचुः

कन्यादानं क्रियतां चाद्य शैल! श्रीमाञ्छम्भुर्भाग्यतस्तेऽद्य लब्धः ।
हृन्मध्ये वै नात्र कार्यो विमर्शस्तस्मादेषा दीयतामीश्वराय ॥ २ ॥
तच्छ्रुत्वा वचनं तेषां सुहृदां वै हिमालयः ।
सम्यक्सङ्कल्पमकरोद् ब्रह्मणानोदितस्तदा ॥
इमां कन्यां तुभ्यमहं ददामि परमेश्वर! ॥ ३ ॥

भार्यार्थं प्रतिगृह्णीष्व मंत्रेणानेन दत्तवान् । अस्मै रुद्राय महते देवदेवाय शम्भवे ॥
कन्या दत्ता महेशाय गिरीन्द्रेण महात्मना ॥ ४ ॥
वेद्यां च बहिरानीतौ दम्पती कमलेक्षणौ ।
उपवेशितौ बहिर्वेद्यां पार्वतीपरमेश्वरौ ॥ ५ ॥
आचार्येणाऽथ तत्रैव कश्यपेन महात्मना ।
आह्वानं हवनार्थाय कृतमग्नेस्तदा द्विजाः ॥ ६ ॥

ब्रह्मा ब्रह्मासनगतो बभूव शिवसन्निधौ । प्रवर्तमाने हवन ऋषयश्च विचक्षणाः ॥
ऊचुः परस्परं तत्र नानादर्शनवेदिनः । वेदवादरताः केचिदवदन्सम्मतेन वै ॥ ८ ॥
एवमेव न चाप्येवमेवमेव न चान्यथा । कार्यमेव न वा कार्यं कार्याकार्यं तथापरे
इत्येवं ब्रुवतां शब्दः श्रूयतेशिवसन्निधौ । स्वकीयंमतमास्थायह्यब्रुवंस्तेपरस्परम्
तत्त्वज्ञानविहीनास्ते केवलं वेदबुद्धयः ॥ १० ॥
तेषां तद्वचनं श्रुत्वा परस्परजयैषिणाम् । प्रहस्यनारदो वाक्यमुवाच शिवसन्निधौ



यूयं सर्वे वादिनश्च वेदवादरतास्तथा ।
मौनमास्थाय भोविप्रा! हृदि कृत्य:सदाशिवम् ॥ १२ ॥
आत्मानं परमात्मानं पराणां परमं च तत् ।
येनेदं कारितं विश्वं यतः सर्वं प्रवर्त्तते ॥
यस्मिन्निलीयते विश्वं तस्मै सर्वात्मने नमः ॥ १३ ॥
सोऽयमास्तेऽधुना गेहे पर्वतेन्द्रस्य भो द्विजाः ।
मुखादस्यैव सञ्जाताः सर्वे यूयं विचक्षणाः ॥ १४ ॥

एवमुक्तास्तदा तेन नारदेनद्विजोत्तमाः । उपदेशकरैर्वाक्यैर्बोधितास्तेद्विजोत्तमाः
वर्तमाने च यज्ञे च ब्रह्मा लोकपितामहः । ददर्श चरणौ देव्यानखेन्दुं च मनोहरम्
दर्शनात्स्खलितः सद्यो बभूवाम्बुजसम्भवः ।
मदनेन समाविष्टो वीर्यं च प्राच्यवद्भुवि ॥ १७ ॥
रेतसा क्षरमाणेन लज्जितोऽभूत्पितामहः ।
चरणाभ्यां ममर्द्दाऽथ महद्गोप्यं दुरत्ययम् ॥ १८ ॥
बहवश्चर्षयो जाता बालखिल्याः सहस्रशः ।
उपतस्थुस्तदा सर्वे ताततातेति चाब्रुवन् ॥ १६ ॥
नारदेन तदोक्तास्ते बालखिल्याः प्रकोपिना ।
गच्छन्तु बटवो यूयं पर्वतं गन्धमादनम् ॥ २० ॥

न स्थातव्यं भवद्भिश्चभवतांनप्रयोजनम् । इत्येवमुक्तास्तेसर्वेबालखिल्याश्चपर्वतम्
नारदेन समादिष्टा ययुः सर्वे त्वरान्विताः ॥ २१ ॥

नारदेन ततोब्रह्माऽऽश्वासितो वचनैः शुभैः । तावच्च हवनंपूर्णंजातंतस्य महात्मनः
महेशस्य तथा विप्राः शान्तिपाठपरा बभुः ।
ब्रह्मघोषेण महता व्याप्तमासीद् दिगन्तरम् ॥ २३ ॥

ततो नीराजितो देवो देवपत्नीभिरुत्तमः । तथैवऋषिपत्नीभिरर्चितः पूजितस्तथा
तथा गिरीन्द्रस्य मनोरमाः शुभा नीराजयामासुरथैव योषितः ।

गीतैः सुगीतज्ञविशारदाश्च तथैव चाऽन्ये स्तुतिभिर्महर्षयः ॥ २५ ॥
रत्नानि च महार्हाणि ददौ तेभ्यो महामनाः ।
हिमालयो महाशैलः संहृष्टः परितोषयन् ॥ २६ ॥
बभौ तदानीं सुरसिद्धसङ्घैर्वेद्यां स्थितोऽसौ सकलत्रको विभुः ।
सर्वैरुपेतो निजपार्षदैर्गणैः प्रहृष्टचेता जगदेकसुन्दरः ॥ २७ ॥
एतस्मिन्नन्तरे तत्र ब्रह्मविष्णुपुरोगमाः । ऋषिगन्धर्वयक्षाश्चयेऽन्ये तत्रसमागताः
सर्वान्समभ्यर्च्य तदा महात्मा महाद्रिरीशः परमेण वर्चसा ।
सद्रत्नवस्त्राभरणानि सम्यग्ददौ च ताम्बूलसुगन्धवार्यपि ॥ २६ ॥
तदा शिवंपुरस्कृत्याभ्यवजह्रुः सुरेश्वराः । तथासर्वेमिलित्वातुऐकपद्येनमोदिताः
पङ्क्तीभूताश्च बुभुजुर्लिङ्गिना शृङ्गिणा सह ।
केचिद्गणाः पृथग्भूतानानाहास्यरसैर्विभुम् ॥ ३१ ॥
अतोषयन्नारदाद्याअनेकालीकसंयुताः । तथाचण्डीगणाः सर्वेबुभुजुःकृतभाजनाः
वैताला क्षेत्रपालाश्च बुभुजुः कृतभाजनाः ।
शाकिनीडाकिनीचैवयक्षिण्योमातृकादयः ॥ ३३ ॥
योगिन्योऽथ चतुःषष्टिर्योगिनो हि तथा परे ।
दश कोट्यो गणानां च कोट्येका च महात्मनाम् ॥ ३४ ॥
एवं तु ऋषयःसर्वे तथाऽन्येविबुधादयः । योगिनोहिमयाचान्येकथिताःपूर्वमेवहि
योगिन्यश्चैव कथितास्तासां भक्ष्यं वदामि वः ।
खड्गानां केचिदानीय क्रव्यंःपवित्रमेवच ॥ ३६ ॥
भुञ्जन्ति चास्थिसंयुक्तं तथान्त्राणि बुभुक्षिताः ।
आनीय केचिच्छीर्षाणि महिषाणां गुरूणि च ॥ ३७ ॥
तथा केचिन्नृत्यमानास्तदानीं रोरूयमाणाः प्रमथाश्चैव चान्ये ।
केचित्तूष्णीमास्थिता रुद्ररूपाः परेचान्यॉंल्लोकमानास्तथैव ॥ ३८ ॥
योगिनीचक्रमध्यस्थो भैरवो हि ननर्त च । तथान्येभूतवेतालामामेत्येवंप्रलापिनः



एवं तेषामुद्धवं हि निरीक्ष्य मधुसूदनः । उवाच प्रहसन्वाक्यं शङ्करं लोकशङ्करम्
एतान्गणान्वारय भो अत्र मत्तांश्च सम्प्रति ।
अस्मिन्काले च यत्कार्यं सर्वैस्तत्कार्यमेवच ॥ ४१ ॥
पाण्डित्येन महादेव तस्मादेतान्निवारय । तच्छ्रुत्वाभगवान्रुद्रोवीरभद्रमुवाचह

रुद्र उवाच

वारयस्व प्रमत्तांश्च क्षीबांश्चैव विशेषतः । तेनोक्तो वीरभद्रश्च शम्भुना परमेष्ठिना
आज्ञापिताः प्रमत्ताश्च वीरभद्रेण धीमता !
प्रमथा वारितास्तेन तूष्णीमाश्रित्य ते स्थिताः ॥ ४४ ॥
निश्चला योगिनीमध्ये भूतप्रमथगुह्यकाः ।
शाकिन्यो यातुधानाश्च कूष्माण्डाः कोपिकपिकर्पटाः ॥ ४५ ॥
तथाऽन्ये भूतवेतालाःक्षेत्रपालाश्च भैरवाः । सर्वेशान्ताःप्रमत्ताश्चबभूवुःप्रमथादयः
एवं विस्तारसंयुक्तं कृतमुद्वहनं तदा । हिमाद्रिणा परं विप्राःसुमङ्गल्यंसुशोभनम्
चत्वारो दिवसा जाताः परिपूर्णेन चेतसा ।
हिमाद्रिणा कृता पूजा देवदेवस्य शूलिनः ॥ ४८ ॥
वस्त्रालङ्काराभरणैरत्नैरुच्चावचैस्ततः । पूजयित्वा महादेवं विर्ष्वचनपरोऽभवत्
लक्ष्मीसमेतं विष्णुं च वस्त्रालङ्करणैः शुभैः ।
पूजयामास हिमवांस्तथा ब्रह्माणमेवच ॥ ५० ॥
इन्द्रं पुरोधसा सार्द्धमिन्द्राण्या सहितं विभुम् ।
तथैव लोकपालांश्च पूजयित्वा पृथक्पृथक् ॥ ५१ ॥
तथैव पूजिता चण्डी भूतप्रमथगुह्यकैः । वस्त्रालङ्करणैश्चैव रत्नैर्नानाविधैरपि ॥
ये चान्य आगतास्तत्र ते च सर्वे प्रपूजिताः ।
एवं तदानीं प्रतिपूजिताश्च देवाश्च सर्वे ऋषयश्च यक्षाः ।
गन्धर्वविद्याधरसिद्धचारणास्तथैव मर्त्याप्सरसां गणाश्च ॥ ५३ ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायांप्रथमे माहेश्वरखण्डे केदारखण्डे शिवपार्वतीविवाहमङ्गलोत्सववर्णनं नाम षड्विंशोऽध्यायः ॥ २६ ॥

# सप्तविंशोऽध्यायः

## विवाहानन्तरे सर्वेषां देवानां स्वेस्वे स्थाने गमनम्

### लोमश उवाच

तथैव विष्णुना सर्वे पर्वताश्च प्रपूजिताः। सह्याचलश्चविंध्यश्चमनाकोगंधमादनः
माल्यवान्मलयश्चैव महेन्द्रो मंदरस्तथा। मेरुश्चैव प्रयत्नेन पूजितो विष्णुना तदा
श्वेतः कृतः श्वेतगिरिर्नीलाद्रिश्च तथैव च।
उदयाद्रिश्च श्रृङ्गश्च अस्ताचलवरो महान्॥ ३॥
मानसाद्रिस्तथा शैलः कैलाशः पर्वतोत्तमः।
लोकालोकस्तथा शैलः पूजितः परमेष्ठिना॥ ४॥
एवं ते पर्वतश्रेष्ठाः पूजिता सर्व एव हि। तथान्ये पूजितास्तेन सर्वे पर्वतवासिनः
विष्णुना ब्रह्मणा सार्द्धं कृतं सर्वं यथोचितम्।
अन्येऽहनि च संप्राप्ते वरयात्रा कृता तथा॥ ६॥
हिमाद्रिणा बंधुभिश्च पर्वतं गंधमादनम्। ययुः सर्वे सुरगणा गणाश्च बहवस्तथा
प्रमथाश्च तथा सर्वे तथा चण्डीगणाः परे।
ये चान्ये बहवस्तत्र समायाता हिमालयम्॥ ८॥
शिवस्योद्वहनं विप्रा शिवेन परिभाविताः। परं हर्षं समापन्ना दृष्ट्वातौदम्पतीतदा
पार्वतीसहितः शम्भुः शम्भुना सह पार्वती।
पुष्पगन्धौ यथा स्यातां वागर्थाविव तत्त्वतः॥ १०॥
तथा प्रकृतिपुंसौ च ऐकपद्येन नान्यथा। दंपती तौ गजारूढौ शुशुभाते महाप्रभौ
विमानस्थस्तदा ब्रह्मा विष्णुश्च गरुडोपरि। ऐरावतगतश्चेन्द्रः कुबेरः पुष्पकोपरि
पाशी च मकरारूढो यमो महिषमेव च।
प्रेतारूढो नैर्ऋतः स्यादग्निर्बस्तगतो महान्॥ १३॥



मृगारूढोऽथ पवन ईशो वृषभमेव च। इत्येवं लोकपालाश्च सग्रहाः परमेष्ठिनः॥
स्वैः स्वैर्बलैः परिक्रांतास्तथाऽन्ये प्रमथादयः।
हिमाद्रिश्च महाशैल ऋषभो गंधमादनः॥ १५॥
सह्याचलो नीलगिरिर्मन्दरो मलयाचलः। कैलाशो हि महातेजामैनाकश्चमहाप्रभः
एते चाऽन्ये च गिरयः श्रीमन्तो हि महाप्रभाः।
सकलत्राश्च ते सर्वे ससुताश्च मनोरमाः॥ १७॥
बलिनो रूपिणः सर्वे मेर्वाद्यास्तत्र पर्वताः। वरयात्राप्रसङ्गेन शिवार्चनपराभवन्॥
नंदिनाह्य पविष्टास्तेमेर्वाद्यास्तत्रपर्वताः। वरयात्राकृतातेनयथोक्ताचहिमाद्रिणा
सर्वेस्तैर्बन्धुभिः सार्द्धं पुनरागमनं कृतम्॥ १६॥
स्वकालयस्थो हिमवान्सरेजे हि महायशाः। शिवसम्पर्कजेनैव महसा परमेण च
विख्यातो हि महाशैलस्त्रिषु लोकेषु विश्रुतः॥ २०॥
कन्यादानेन महता तुष्टो यस्य च शङ्करः।
ते धन्यास्ते महात्मानः कृतकृत्यास्तथैव च॥ २१॥
द्व्यक्षरं नाम येषां च जिह्वाग्रेसंस्थितंसदा। शिवेति द्व्यक्षरंनामयैर्हृदीरितमद्यवै
ते वै मनुष्यरूपेण रुद्रा एव न संशयः॥ २२॥
किञ्चिद्दानेन संतुष्टः पत्रेणाऽपितथैव च। तोयेनापि हि संतुष्टोमहादेवोनिरंतरम्
पत्रेण पुष्पेण तथा जलेन प्रीतो भवत्येष सदाशिवो हि।
तस्माच्च सर्वैः प्रतिपूजनीयः शिवो महाभाग्यकरो नृणामिह॥ २४॥
एको महाञ्ज्योतिरजः परेशः परापराणां परमो महात्मा।
निरंतरो निर्विकारो निरीशो निराबाधो निर्विकल्पो निरीहः॥ २५॥
निरंजनो नित्यरूपो निरोधो नित्यानन्दो नित्यमुक्तः सदैव।
एवंभूतो देवदेवोऽर्चितश्च तैर्देवाद्यैर्विश्ववेद्यो भवश्च॥
स्तुतो ध्यातः पूजितश्चिन्तितश्च सर्वज्ञोऽसौ सर्वदा सर्वदश्च॥ २६॥
यथा वरिष्ठो हिमवान्प्रसिद्धः सर्वैर्गुणैः सर्वगुणो महात्मा।

विश्वेशवंद्यो हि तदा हिमालयो जातो गिरीणां प्रवरस्तदानीम् ॥२७॥
मेनया सह धर्मात्मा यथास्थानगतस्ततः । सर्वान्विसर्जयामास पर्वतान्पर्वतेश्वरः
गतेषु तेषु हिमवान्पुत्रैः पौत्रैः प्रपौत्रकैः । राजा गिरीणां प्रवरो महादेवप्रसादतः
अथो गिरिजया सार्द्धं महेशो गन्धमादने ।
एकान्ते च मतिं चक्रे रमणार्थं स्वरूपवान् ॥ ३० ॥
सुरतेनैव महता तपसा हि समागमे । द्वयोः सुरतमारब्धं तद्द्वयोश्च तदाऽभवत्
अनिष्टं महदाश्चर्यं प्रलयोपममेव च । तस्मिन्महारते प्राप्ते नाविन्दंत सुखं परम् ॥
सर्वे ब्रह्मादयो देवाः कार्याकार्यव्यवस्थितौ ।
रेतसा च जगत्सर्वं नष्टं स्थावरजङ्गमम् ॥ ३३ ॥
सस्मार चाग्निं ब्रह्मा च विष्णुश्चाध्यात्मदायकः ।
मनसा संस्मृतः सद्यो जगामाग्निस्त्वरान्वितः ॥ ३४ ॥
ताभ्यां संप्रेषितोऽपश्यद्रुचिरं शिवमन्दिरम् ।
द्वारि स्थितं नंदिनं च ददर्शाऽग्रे महाप्रभम् ॥ ३५ ॥
अग्निर्हंसस्तदा भूत्वा काश्मीरसदृशच्छविः ।
प्रविष्टोन्तः पुरं शम्भोर्नानाश्चर्यसमन्वितम् ॥ ३६ ॥
अनेकरत्नसंवीतं प्रासादैश्च स्वलंकृतम् । तदंगणमनुप्राप्य उपविश्याह हव्यवाट् ॥
पाणिपात्रस्य मे ह्यम्ब भिक्षां देह्यवरोधतः ।
तच्छ्रुत्वा वचनं तस्य पाणिपात्रस्य बालिका ॥ ३८ ॥
यावद्दातुं च सा रेमे भिक्षां तस्मै ततः स्वयम् ।
उत्थाय सुरतात्तस्माच्छिवो हि कुपितो भृशम् ॥ ३९ ॥
रुद्रस्त्रिशूलमुद्यम्य भैरवो ह्यऽभवत्तदा ।
निवारितो गिरिजया वधात्तस्माच्छिवः स्वयम् ॥
भिक्षां तस्मै ददौ वाचा अग्नये जातवेदसे ॥ ४० ॥
पाणौभिक्षांगृहीत्वाथप्रत्यक्षंतेनचाग्निना । भिक्षिताकुपितातंवैशशापगिरिजाततः



रे भिक्षो भविता शापात् सर्वभक्षो ममाऽऽशु वै ।
अनेन रेतसा सद्यः पीडां प्राप्स्यसि सर्वतः ॥ ४२ ॥
इत्युक्तो भक्षयित्वाऽग्नी रेत ईशस्य हव्यवाट् ।
यत्र देवाः स्थिताः सर्वे ब्रह्माद्याश्चैव सर्वशः ॥ ४३ ॥
आगत्याऽकथयत्सर्वं तद्रेतो भक्षणादिकम् ।
सर्वे सगर्भा ह्यभवन्निन्द्राद्या देवतागणाः ॥ ४४ ॥
अग्नेर्यथा हविश्चैव सर्वेषामुपतिष्ठति । अग्नेर्मुखोद्भवेनैव रेतसा ते सुरेश्वराः ॥४६
सगर्भाह्यभवन्सर्वे चिन्तया च प्रपीडिताः । विष्णुं शरणमाजग्मुर्देवदेवेश्वरं प्रभुम्

देवा ऊचुः

त्वं त्राता सर्व देवानां लोकानांप्रभुरेव च ।
तस्माद् रक्षा विधातव्या शरणागतवत्सल !॥ ४७ ॥
वयं सर्वे मर्तुकामा रेतसाऽनेन पीडिताः । असुरेभ्यः परित्रस्तावयंसर्वेदिवौकसः
शरणं शङ्करं याताः परित्रातुं कृतोद्यमाः । यदा पुत्रो हिरुद्रस्यभविष्यतितदावयम्
सुखिनः स्याम सर्वे वै निर्भयाश्च त्रिविष्टपे ॥ ४९ ॥
एवं विम्र्भ्रमानानां सर्वेषां भयमागतम् ।
अनेन रेतसा विष्णो ! जीवितुं शक्यते कथम् ॥ ५० ॥
त्रिवर्गो हि यथा पुंसां कृतो हि सुपरिष्कृतः ।
विपरीतो भवत्येव विना देवेन नान्यथा ॥ ५१ ॥
तस्मात्तद्दै बलं मत्वा सर्वेषामपि देहिनाम् ।
कार्याकार्यव्यवस्थायां सर्वे मन्यामहे वयम् ॥ ५२ ॥
तथा निशम्य देवानां परेशः परिदेवनम् । उवाच प्रहसन्वाक्यंदेवानां देवतारिहा
स्तूयतां वै महादेवो महेशः कार्यगौरवात् ॥ ५४ ॥
तथेति गत्वा ते सर्वे देवा विष्णुपुरोगमाः ।
तथा ब्रह्मादयः सर्व ईडिरे ऋषयो हरम् ॥ ५५ ॥

ॐनमोभर्गाय देवाय नीलकण्ठाय मीढुषे । त्रिनेत्राय त्रिदेवायलोकत्रितयधारिणे
त्रिस्वराय त्रिमात्रायत्रिवेदायत्रिमूर्त्तये । त्रिवर्गाय त्रिधामायत्रिपदायत्रिशूलिने

त्राहि त्राहि महादेव ! रेतसो जगतः पते !॥ ५८ ॥

ब्रह्मणा तु स्तुतो यावत्तावद्देवो वृषध्वजः । प्रादुर्बभूव तत्रैव सुराणां कार्यसिद्धये

दृष्टस्तदानीं जगदेकबंधुर्महात्मभिर्देववरैः सुपूजितः ।
संस्तूयमानो विविधैर्वचोभिः प्रत्यग्र पैः श्रुतिसंमतैश्च ॥ ६० ॥

स्तुवतां चैव देवानामुवाच परमेश्वरः । त्रासं कुर्वन्तुमा सर्वे रेतसाऽनेनपीडिताः

वमनं वै भवद्भिश्च कार्यमद्यैव भोः सुराः ।
तथेति मत्वा ते सर्व इन्द्राद्या देवतागणाः ॥
वेमुः सर्वे तदा विप्रास्तद्रेतः शङ्करस्य च ॥ ६२ ॥

ऐकपद्येन तद्रेतो महापर्वतसन्निभम् । तप्तचामीकरप्रख्यं बभूव परमाद्भुतम् ॥ ६३ ॥

सर्वे च सुखिनो जाता इन्द्राद्या देवतागणाः ।
विना ह्यग्निं च ते सर्वे परितुष्टास्तदाऽभवन् ॥ ६४ ॥

तेनाग्निनापि चोक्तस्तु शङ्करो लोकशङ्करः । किं मयाद्य महादेव कर्तव्यं देवतावर!

तद्ब्रूहि मे प्रभोऽद्य त्वं येनाऽहं सर्वदा सुखी ।
भविष्यामि च येनाहं देवानां हव्यवाहकः ॥ ६६ ॥
तदोवाच शिवः साक्षाद्देवानामिह शृण्वताम् ।
रेतो विसृज्यतां योनौ तदाग्निः प्रहसन्निव ॥ ६७ ॥

उवाच शङ्करं देवं भवत्तेजो दुरासदम् । इदमुल्बणवत्तेजो धार्यते प्राकृतैः कथम् ॥

ततः प्रोवाच भगवानग्निं प्रति महेश्वरः ।
मासिमासि प्रतप्तानां देहे तेजो विसृज्यताम् ॥ ६९ ॥
तथेति मत्वा वचनं महाप्रभः स जातवेदाः परमेण वर्चसा ।
समुज्ज्वलंस्तत्र महाप्रभावो ब्राह्मे मुहूर्त्ते हि स चोपविष्टः ॥ ७० ॥
तदा प्रातः समुत्थाय प्रातः स्नानपराः स्त्रियः ।



ययुः सदा ऋषीणां च सत्यस्ता जातवेदसम् ॥ ७१ ॥
दृष्ट्वा प्रज्वलितं तत्र सर्वास्ताः शीतकर्षिताः ।
तप्तुकामास्तदा सर्व्वा ह्यरुन्धत्या निवारिताः ॥ ७२ ॥
तया निवारिताश्चापि तास्तेपुः कृत्तिकाः स्वयम् ।
यावत्तेपुश्च ताः सर्वा रेतसः परमाणवः ॥
विविशू रोमकूपेषु तासां तत्रैव सत्वरम् ॥ ७३ ॥
नीरेतोऽग्निस्तदा जातो विश्रान्तः स्वमेव हि ॥ ७४ ॥
ततस्ता ऋषिभार्या हि ययुः स्वभवनं प्रति ।
ऋषिभिस्तु तदा शप्ताः कृत्तिका खेचरा भवन् ॥ ७५ ॥

तदानीमेवताः सर्वाव्यभिचारेण दुःखिताः । तत्ससर्जुस्तदारेतःपृष्ठेहिमवतोगिरेः
ऐकपद्येन तद्रेतस्तप्तचामीकरप्रभम् । गंगायां च तदा क्षिप्रं कीचकैः परिवेष्टितम्

षण्मुखं बालकं ज्ञात्वा सर्वे देवा मुदान्विताः ।
गर्गेणोक्तास्तदन्ते वै सुखेन ह्रियतामिति ॥ ७८ ॥

शम्भोःपुत्रःप्रसादेनसर्वोभवति शाश्वतः । गङ्गायापुलिनेजातःकार्त्तिकेयोमहाबलः

उपविष्टोऽथ गांगेयो ह्यहोरात्रोषितस्तदा ।
शाखो विशाखोऽतिबलः षण्मुखोऽसौ महाबलः ॥ ८० ॥
जातो यदाथ गंगायां षण्मुखः शङ्करात्मजः ।
तदानीमेव गिरिजा संजाता प्रस्नुतस्तनी ॥ ८१ ॥
शिवं निरीक्ष्य सा प्राह हे शम्भो ! प्रस्नवो महान् ।
संजातो मे महादेव ! किमर्थस्तन्निरीक्ष्यताम् ॥
सर्वज्ञोऽपि महादेवो ह्यब्रवीत्तामथाज्ञवत् ॥ ८२ ॥
नारदस्तत्र चागत्य प्रोक्तवाञ्जन्म तस्य तत् ।
शिवाय च शिवायै च पुत्रो जातो हि सुन्दरः ॥ ८३ ॥

तदाकर्ण्य वचो विप्रा हर्षनिर्भरमानसाः । बभूवुः प्रमथाः सर्वे गंधर्वा गीततत्पराः

अनेकाभिः पताकाभिश्चैलपल्लवतोरणैः । तथाविमानैर्बहुभिर्बभौ प्रज्वलितो महान्
पर्वतः पुत्रजननाच्छङ्करस्य महात्मनः ॥ ८१ ॥
तदा सर्वे सुरगणा ऋषयः सिद्धचारणाः । रक्षोगंधर्वयक्षाश्च अप्सरोगणसेविताः
ऐकपद्येन ते सर्वे सहिताः शङ्करेण तु । द्रष्टुं गांगेयमभिकं जग्मुः पुलिनसंस्थितम्
ततो वृषभमारुह्य ययौ गिरिजया सह ।
अन्यैः समेतो भगवान् सुरैरिन्द्रादिभिस्तथा ॥ ८८ ॥
तदा शंखाश्च भेर्यश्च नेदुस्तूर्याण्यनेकशः ॥ ८९ ॥
तदानीमेव सर्वेशं वीरभद्रादयोगणाः । अन्वयुः केलिसंख्यानानावादित्रवादकाः
वादयन्तश्च वाद्यानि ततानि विततानि च ॥ ९० ॥
केचिन् नृत्यपरास्तत्र गायकाश्च तथा परे ।
स्तावकाः स्तूयमानाश्च चक्रुस्ते गुणकीर्तनम् ॥ ९१ ॥
एवंविधास्ते सुरसिद्धयक्षा गंधर्वविद्याधरपन्नगा श्चमी ।
शिवेन सार्द्धं परिहृष्टचित्ता द्रष्टुं ययुस्तं वरदं च शाङ्करिम् ॥ ९२ ॥
यावत्समीक्षया मासुर्गाङ्गेयं शङ्करोपमम् ।
ददृशुस्ते महत्तेजो व्याप्तमासीज्जगत्त्रयम् ॥ ९३ ॥
तत्तेजसावृतं बालं तप्तचामीकरप्रभम् । सुमुखं सुश्रिया युक्तं सुनसं सुस्मितेक्षणम्
चारुप्रसन्नवदनं तथा सर्वाङ्गसुन्दरम् । तं दृष्ट्वा महदाश्चर्यं गांगेयं प्रथितात्मकम् ॥
ववन्दिरे तदा बालं कुमारं सूर्यवर्चसम् । प्रमथाश्च गणाः सर्वे वीरभद्रादयस्तथा
परिवार्योपतस्थुस्ते वामदक्षिणभागतः ।
तथा ब्रह्मा च विष्णुश्च इन्द्रश्चापि सुरैर्वृतः ॥ ९७ ॥
ऋषयो यक्षगंधर्वाः परिवार्य कुमारकम् । दंडवत्पतिता भूमौ केचिच्च नतकंधराः॥
प्रणेमुः शिरसा चान्ये मत्वा स्वामिनमव्ययम् ।
अवाद्यंत विचित्राणि वादित्राणि महोत्सवे ॥
एवमभ्युदये तस्मिन्नृषयः शान्तिमापठन् ॥ ९९ ॥



एतस्मिन्नंतरेजातः शङ्करो गिरिजापतिः । अवतीर्य वृषाच्छीघ्रंपार्वत्यासहसुव्रताः
पुत्रं निरैक्षत तदा जगदेकबंधुः प्रीत्यायुतः परमया सह वै भवान्या ।
स्नेहान्वितो भुजगभोगयुतो हि साक्षात्सर्वेश्वरः परिवृतः प्रमथैः प्रहृष्टः
उपगुह्य गुहं तत्र पार्वती जातसंभ्रमा ।
प्रस्नुतं पाययामास स्तनं स्नेहपरिप्लुता ॥ १०२
तदा नीराजितो देवैः सकलत्रैर्मुदान्वितैः ।
जयशब्देन महता व्याप्तमासीन्नभस्तलम् ॥ १०३ ॥
ऋषयो ब्रह्मघोषेण गीतेनैव च गायकाः । वाद्यैश्चवादकाश्चैवउपतस्थुःकुमारकम्
स्वमङ्कमारोप्य तदा गिरीशः कुमारकं तं प्रभया महाप्रभम् ।
बभौ भवानीपतिरेव साक्षाच्छ्रिया युतः पुत्रवतां वरिष्ठः ॥ १०५ ॥
दंपती तौ तदा तत्र ऐकपद्येन नंदतुः । अभिषिच्यमान ऋषिभिरावृतः सुरसत्तमैः
कुमारः क्रीडयामास उत्सङ्गे शङ्करस्य च ।
कण्ठे स्थितं वासुकिं च पाणिभ्यां समपीडमत् ॥ १०७ ॥
मुखं प्रपीडयित्वाऽसौ पाणीनगणयत्तदा ।
एकं त्रीणि दशाष्टौ च विपरीतक्रमेण च ॥ १०८ ॥
प्रहस्य भगवाञ्छंभुरुवाच गिरिजां तदा ॥ १०९ ॥
मंदस्मितेन च तदा भगवान्महेशः प्रातो मुदं च परमां गिरिजासमेतः ।
प्रेम्णा सगद्गदगिरा जगदेकबन्धुर्नोवाच किंचन तदा भुवनैकभर्ता॥११०
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायांप्रथमे माहेश्वरखण्डे
केदारखण्डे कार्त्तिकेयस्वामिकुमारोत्पत्तिवर्णनंनामसप्तविंशोऽध्यायः ॥ २७ ॥

———

# अष्टाविंशोऽध्यायः

## देवैः सह कुमारस्य गमनम्

### लोमश उवाच

कुमारं स्वाङ्कमारोप्य उवाच जगदीश्वरः।
देवान् प्रति तदा रुद्रः सेन्द्रान्भगः प्रतापवान्॥ १॥
किं कार्यं कथ्यतां देवाः कुमारेणाधुना मम।
तदोचुः सहिताः सर्वे देवं पशुपतिं प्रति॥ २॥
कारकाद् भयमुत्पन्नं सर्वेषां जगतां विभो!।
त्राता त्वं जगतां स्वामी तस्मात्त्राणं विधीयताम्॥ ३॥
कुमारेण हतोऽद्यैव तारको भविताप्रभो। तस्माद्द्यैवयास्यामस्तारकंहंतुमुद्यताः
तथेतिमत्वा सहसा निर्जग्मुस्ते तदा सुराः। कार्त्तिकेयंपुरस्कृत्यशङ्करात्मजमेवहि
सर्वे मिलित्वा सहसा ब्रह्मविष्णुपुरोगमाः।
देवानामुद्यमं श्रुत्वा तारकोऽपि महाबलः॥ ६॥
सैन्येन महता चैव ययौ योद्धुं सुरान्प्रति। देवैर्दृष्टंसमायातंतारकस्यमहद्बलम्
तदा नभोगता वाणी ह्युवाच परिसांत्व्य तान्।
शाङ्करिं च पुरस्कृत्य सर्वे यूयं प्रतिष्ठिताः॥ ८॥
दैत्यान्विजित्य संग्रामे जयिनो हि भविष्यथ॥ ९॥
वाचं तु खेचरीं श्रुत्वा देवाः सर्वे समुत्सुकाः।
कुमारं च पुरस्कृत्य सर्वे ते गतसाध्वसाः॥ १०॥
युद्धकामाः सुरायावत्तावत्सर्वेसमागताः। वरणार्थंकुमारस्यसुतामृत्योर्दुरत्यया
ब्रह्मणा नोदिता पूर्वं तपः परममाश्रिता। तपसा तेन महता कुमारं प्रति वै तदा
आगता दुहिता मृत्योः सेना नामैकसुन्दरी॥ १२॥



तां दृष्ट्वा तेऽब्रुवन्सर्वे देवं पशुपतिं प्रति। एनं कुमारमुद्दिश्य आगता ह्यतिसुन्दरी
ब्रह्मणो बचनाच्चैव कुमारेण तदावृता। अथ सेनापतिर्जातःकुमारःशांकरिस्तदा
तदा शंखाश्चभेर्यश्च पटहानकगोमुखाः। तथा दुन्दुभयोनेदुर्मृदंगाश्च महास्वनाः
तेननादेनमहतापूरितं च नभस्तलम्। तदा गौरी च गंगा च कृत्तिकामातरस्तथा
परस्परमथोचुस्ताः सुतो मम ममेति च॥ १६॥
एवं विवादमापन्नाःसर्वास्तामातृकादयः। निवारितानारदेनमौढ्यंमाकुरुतेतिच
पार्वत्यां शङ्कराज्जातो देवकार्यार्थसिद्धये।
तूष्णीं भूतास्तदा सर्वाः कृत्तिका मातृभिः सह॥ १८॥
गुहेनोक्तास्तदा सर्वा ऋषिपत्न्यश्च कृत्तिकाः।
नक्षत्राणि समाश्रित्य भवद्भिः स्थीयतां चिरम्॥ १९॥
तथा मातृगणस्तेन स्वामिना स्थापितो दिवि।
मृत्योः कन्याञ्च संगृह्य कार्त्तिकेयस्त्वरान्वितः॥ २०॥
इन्द्रं प्रोवाच भगवान्कुमारः शङ्करात्मजः। दिवंयाहिसुरैः सार्द्धंराज्यंकुरुनिरंतरम्
इन्द्रेणोक्तः कुमारो हि तारकेण प्रपीडिताः।
स्वर्गाद्विद्राविताः सर्वे वयं याता दिशोदश॥ २२॥
किं पृच्छसि महाभाग! अस्मान्पदपरिच्युतान्।
एवमुक्तस्तदा तेन वज्रिणा शङ्करात्मजः॥
प्रहस्येन्द्रं प्रति तदा मा भैषीत्यभयं ददौ॥ २३॥
यावत्कथयतस्तस्य शांकरेश्च महात्मनः। कैलासंतु गते रुद्रे पार्वत्या प्रमथैः सह
आजगाम महादैत्यो दैत्यसेनाभिरावृतः। रणदुन्दुभयो नेदुस्तथा प्रलयभीषणाः
रणकर्कशतूर्याणि डिंडिमान्यद्भुतानि च।
गोमुखाः खरशृङ्गाणि काहलान्येव भूरिशः॥ २६॥
वाद्यभेदा अवाद्यन्त तस्मिन्दैत्यसमागमे। गर्जमानास्तदावीरास्तारकेणसहैवतु
उवाच नारदो वाक्यं तारकं देवकण्टकम्॥ २८॥

नारद उवाच

पुरा देवैः कृतो यत्नो यथार्थं नात्र संशयः। तथैवचासुरश्रेष्ठमयोक्तंनान्यथाभवेत्
कुमारोऽयं च शर्वस्य तवार्थं चोपपादितः।
एवं ज्ञात्वा महाबाहो! कुरु यत्नं समाहितः॥ ३०॥
नारदोक्तं निशम्याथ तारकः प्रहसन्निव। उवाच वाक्यं मेधावीगच्छत्वंचपुरंदरम्
मम वाक्यं महर्षेत्वंवदशीघ्रंयथातथम्। कुमारश्चपुरस्कृत्यमयायोद्धुं त्वमिच्छसि
मूढभावं समाश्रित्य कर्तुमिच्छसि नान्यथा।
मनुष्यमेकमाश्रित्य मुचुकुन्दाख्यमेवच॥ ३३॥
तत्प्रभावेऽमरावत्यां स्थितोऽसि त्वं न चान्यथा।
कौमारं बलमाश्रित्य तिष्ठसे त्वं ममाग्रतः॥ ३४॥
त्वां हनिष्याम्यहं मन्द! लोकपालैः सहैव हि।
एवं कथय देवेन्द्रं देवर्षे! नान्यथा वद॥ ३५॥
तथेति मत्वा भगवान्स नारदो ययौ सुराञ्छक्रपुरोगमांश्च।
आचष्ट सर्वं ह्यसुरेन्द्रभाषितं सहोपहासं मतिमांस्तथैव॥ ३६॥

नारद उवाच

भवद्भिः श्रूयतां देवा वचनं मम नान्यथा। तारकेण यदुक्तं चसानुगेनावधार्यताम्

तारक उवाच

त्वां हनिष्यामि रे मूढ! नान्यथा मम भाषितम्॥ ३८॥
मुचुकुन्दं समासाद्य लोकपालैश्च पूजितः।
न त्वया भीरुणा योत्स्ये देवो भूत्वा नराश्रितः॥ ३९॥
तस्य वाक्यं निशम्योचुः सर्वे देवाः सवासवाः।
कुमारश्च पुरस्कृत्य नारदश्चर्षिसत्तमम्॥ ४०॥
जानासित्वंहिदेवर्षेकुमारस्यबलाबलम्। अज्ञोभूत्वाकथंवाक्यमुक्तन्तस्यममाग्रतः
प्रहस्य नारदो वाक्यमुवाच तस्य सन्निधौ।



अहमप्युपहासं च वाक्यं तारकमुक्तवान्॥ ४२॥
जानीध्वममराः सर्वे कुमारं जयिनं सुराः।
भविष्यत्यत्र मे वाक्यं नात्र कार्या विचारणा॥ ४३॥
नारदस्य वचः श्रुत्वा सर्वेदेवा मुदान्विताः।
ऐकपद्येन चोत्तस्थुर्योद्धुकामाश्च तारकम्॥ ४४॥
कुमारं गजमारोप्य देवेन्द्रो ह्यग्रगोऽभवत्। सुरसैन्येन महता लोकपालैःसमावृतः
तदा दुन्दुभयो नेदुर्भेरीतूर्याण्यनेकशः। वीणावेणुमृदङ्गानि तथा गन्धर्वनिस्वनाः
गजं दत्त्वा महेन्द्राय कुमारो यानमारुहत्।
अनेकरत्नसंवीतं नानाश्चर्यसमन्वितम्॥
विचित्रचित्रं सुमहत्तथाऽऽश्चर्यसमन्वितम्॥ ४७॥
विमानमारुह्य तदा महायशाः स शाङ्करिः सर्वगणैरुपेतः।
श्रिया समेतः परया बभौ महान्स वीज्यमानश्चमरैर्महाप्रभैः॥ ४८॥
प्राचेतसं छत्रमहामणिप्रभं रत्नैरुपेतं बहुभिर्विराजितम्।
धृतं तदा तेन कुमारमूर्द्धनि चन्द्रेण चान्द्रैः किरणैः सुशोभितम्॥
संमीलितास्तदा सर्वे देवा इन्द्रपुरोगमाः।
बलैःस्वैःस्वैःपरिक्रान्ता योद्धुकामा महाबलाः॥ ५०॥
यमोऽपि स्वगणैः सार्द्धं मरुद्भिश्च सदागतिः।
पाथोभिर्वरुणस्तत्र कुबेरो गुह्यकैः सह॥
ईशोऽपि प्रमथैः सार्द्धं नैर्ऋतो व्याधिभिः सह॥ ५१॥
एवं तेऽष्टौ लोकपा योद्धुकामाः सर्वे मिलित्वा तारकं हन्तुमेव।
पुरस्कृत्वा शाङ्करिं विश्ववन्द्यं सेनापतिं चात्मविदां वरिष्ठम्॥ ५२॥
एवं ते योद्धुकामा हि अवतेरुश्च भूतलम्।
अन्तर्वेद्यां स्थिताः सर्वे गङ्गायमुनमध्यगाः॥ ५३॥
पातालाच्च समायातास्तारकस्योपजीविनः।

चेरुरङ्गबलोपेता हन्तुकामाः सुराञ्रणे ॥ ५४ ॥
तारको हि समायातो विमानेन विराजितः ।
छत्रेण च महातेजा ध्रियमाणेन मूर्द्धनि ॥ ५५ ॥
चामरैर्वीज्यमानो हि शुशुभे दैत्यराट् स्वयम् ॥ ५६ ॥
एवं देवाश्च दैत्याश्च अन्तर्वेद्यां स्थितास्तदा ।
सैन्येन महता तत्र व्यूहान्कृत्वा पृथक् पृथक् ॥ ५७ ॥
गजान्कृत्वा ह्यकतश्च हयांश्च विविधांस्तथा ।
स्यन्दनानि विचित्राणि नानारत्नयुतानि च ॥ ५८ ॥
पदाता बहवस्तत्र शक्तिशूलपरश्वधैः । खड्गतोमरनाराचैः पाशमुद्गरशोभिताः ॥
ते सेनेसुरदैत्यानांशुशुभातेपरस्परम् । हन्तुकामास्तदा ते वैस्तूयमानाश्चबन्धुभिः

इति श्रीस्कान्देमहापुराणएकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे
शिवशास्त्रे देवैः सहतारकासुरस्य सङ्ग्रामे देवदैत्यसेनासन्नाहवर्णनं
नामाष्टाविंशोऽध्यायः ॥ २८ ॥

---------

# एकोनत्रिंशोऽध्यायः

## मुचुकुन्दतारकयुद्धवर्णनम्

### लोमश उवाच

उभेसेने तदा तेषां सुराणां चामरद्विषाम् । अनेकाश्चर्यसम्वीते चतुरङ्गबलान्विते
विरेजतुस्तदाऽन्योन्यं गर्जतो वाम्बुदागमे ॥ १ ॥
एतस्मिन्नन्तरे तत्र वलगमानाः परस्परम् । देवासुरास्तदासर्वेयुयुधुश्च महाबलाः
युद्धं सुतुमलं ह्यासीद्देवदैत्यसमाकुलम् । रुण्डमुण्डाङ्कितं सर्वं क्षणेन समपद्यत
भूमौ निपतितास्तत्र शतशोऽथ सहस्रशः ।



केषांचिद्बाहवश्छिन्नाः खड्गपातैः सुदारुणैः ॥ ४ ॥
मुचुकुन्दो हि बलवांस्त्रैलोक्येऽमितविक्रमः ॥ ५ ॥
तारको हि तदा तेन मुचुकुन्देन धीमता । खड्गेन चाहतस्तत्रसर्वप्राणेन वक्षसि
प्रसह्य तत्प्रहारं च प्रहसन्वाक्यमब्रवीत् ॥ ६ ॥
किं रे मूढ! त्वया चाद्य कृतमस्ति बलादिदम् ।
न त्वया योद्धुमिच्छामि मानुषेणैव लज्जया ॥ ७ ॥
तारकस्य वचः श्रुत्वा मुचुकुन्दोऽभ्यभाषत ।
मया हतोऽसि दैत्येन्द्र ! नान्यो भवितुमर्हसि ॥ ८ ॥
दृष्ट्वामेखड्गसम्पातंनत्वंतिष्ठसिचाग्रतः । त्वांहन्मिपश्यमेशौर्यंदैत्यराजस्थिरोभव
एवमुक्त्वा तदावीरो मुचुकुन्दो महाबलः ।
यावज्जघान खड्गेन तावच्छक्त्या समाहतः ॥
मान्धातुस्तनयस्तत्र पपात रणमण्डले ॥ १० ॥
पतितस्तत्क्षणादेव चोत्थितः परवीरहा ॥ ११ ॥
स सज्जमानोतिमहाबलो वै हन्तुं तदा दैत्यपतिं च तारकम् ।
ब्रह्मास्त्रमुद्यम्य धनुर्गृहीत्वा मान्धातृपुत्रो भुवनैकजेता ॥ १२ ॥
स तारकं योद्धुकामस्तरस्वी रुषान्वितोत्फुल्लविलोचनो महान् ।
स नारदो ब्रह्मसुतो बभाषे तदा नृवीरं मुचुकुन्दमेवम् ॥ १३ ॥
न तारको हन्यते मानुषेण तस्मादेतन्मा विमोचीर्महास्त्रम् ॥ १४ ॥
निशम्य वचनं तस्य देवर्षेर्नारदस्य च । मुचुकुन्द उवाचेदं भविता कोऽस्यमारकः
तदोवाच महातेजा नारदो दिव्यदर्शनः ।
एनं हन्ता कुमारश्च कुमारोऽयं शिवात्मजः ॥ १६ ॥
तस्माद्भवद्भिः स्थातव्यमैकपद्येन युध्यताम् ।
तिष्ठ त्वं चायतो भूत्वा मुचुकुन्दमहामते !॥ १७ ॥
निशम्य वाक्यं च मनोहरं शुभं ह्युदीरितं तेन महाप्रभेण ।

सर्वे सुराः शान्तिपरा बभूवुस्तेनैव साकं नृवरेण यत्नात् ॥ १८ ॥

ततो दुन्दुभयो नेदुःशङ्खाश्चकृतनिश्चयाः । ताडिताविविधैर्वाद्यैःसुरासुरसमन्वितैः
जगर्जुरसुरास्तत्र देवान्प्रति कृतोद्यमाः । शिवकोपोद्भवोवीरोवीरभद्रोरुषान्वितः
गणैर्बहुभिरासाद्य तारकं च महाबलम् । मुचुकुन्दं पृष्ठतः कृत्वा तथैव चसुरानपि
तदा ते प्रमथाः सर्वे पुरस्कृत्य कुमारकम् । युयुधुःसंयुगेतत्र वीरभद्रादयो गणाः
त्रिशूलैर्ऋष्टिभिः पाशैःखड्गैःपरशुपट्टिशैः । निजघ्नुःसमरेऽन्योन्यंसुरासुरविमर्द्दने
तारको वीरभद्रेण त्रिशूलेन हतो भृशम् । पपात सहसा तत्र क्षणमूर्च्छापरिप्लुतः
उत्थाय च मुहूर्त्ताच्च तारको दैत्यपुङ्गवः । लब्धसंज्ञोबलाविष्टो वीरभद्रं जघान च

स शक्तिं च महातेजा वीरभद्रो हि तारकम् ।

त्रिशूलेन च घोरेणशिवस्यानुचरो बली ॥ २६ ॥

एवं संयुध्यमानौ तौ जघ्नतुश्चेतरेतरम् । द्वन्द्वयुद्धं सुतुमुलं तयोर्जातं महात्मनोः
सुरास्तत्रैव समरे प्रेक्षका ह्यभवंस्तदा । तयोर्भेरीमृदङ्गाश्च पटहानकगोमुखाः ॥
तथा डमरुनादेन व्याप्तमासीज्जगत्त्रयम् । तेन घोषेण महतायुध्यमानौमहाबलौ
शुशुभातेऽतिसंरब्धौ प्रहारैर्जर्जरीकृतौ । अन्योन्यमभिसंरब्धौतौबुधाङ्गारकाविव
नारदेन तदा ख्यातो वीरभद्रस्य तद्वधः । न रोचते च तद्वाक्यंवीरभद्रस्य वै तदा
नारदेन यदुक्तं हि तारकस्य वधं प्रति । यथा रुद्रस्तथा सोऽपिवीरभद्रोमहाबलः
एवं प्रयुध्यमानौ तौ जघ्नतुश्चेतरेतरम् । अन्योन्यं स्पर्द्धमानौतौगर्जंतौसिंहयोरिव

एवं तदा तौ भुवि युध्यमानौ महात्मना ज्ञानवतां वरेण ।
स वीरभद्रो हि तदा निवारितो वाक्यैरनेकैरथ नारदेन ॥ ३४ ॥
तथा निशम्य तद्वाक्यं नारदस्य मुखोद्गमम् ।
वीरभद्रोरुषाविष्टो नारदं प्रत्युवाच ह ॥ ३५ ॥
तारकं च वधिष्यामि पश्य मेऽद्य पराक्रमम् ।
आनयन्ति च ये वीराः स्वामिनं रणसंसदि ॥
ते पापिनो ह्यधर्मिष्ठा विमृशन्ति रणं गताः ॥ ३६ ॥



भीरवस्ते तु विज्ञेया न वाच्यास्ते कदाचन ।
त्वं न जानासि देवर्षे ! योधानां च प्रतिक्रियाम् ॥ ३७ ॥
मृत्युं च पृष्ठतः कृत्वा रणभूमौ गतव्यथाः ।
शस्त्राशस्त्रैर्भिन्नगात्राः प्रशस्ता नात्रसंशयः ॥ ३८ ॥
इत्युक्त्वा चावदद् देवान्वीरभद्रो महाबलः ।
शृण्वन्तु मम वाक्यानि देवा इन्द्रपुरोगमाः ॥ ३९ ॥
अतारकां महीञ्चाद्य करिष्ये नात्र संशयः ॥ ४० ॥

अथ त्रिशूलमादाय तारकेण युयोध सः । वृषारूढैरनेकैश्च त्रिशूलवरधारिभिः ॥
कपर्द्दिनो वृषांकाश्च गणस्तैतिप्रहारिणः । वीरभद्रं पुरस्कृत्य वीरभद्रपराक्रमाः
त्रिशूलधारिणः सर्वे सर्वे सर्पाङ्गभूषणाः । सचन्द्रशेखराःसर्वे जटाजूटविभूषिताः

नीलकण्ठा दशभुजाः पञ्चवक्त्रास्त्रिलोचनाः ।
छत्रचामरसम्वीताः सर्वे तेऽत्युग्रबाहवः ॥ ४४ ॥

वीरभद्रं पुरस्कृत्य सर्वे हरपराक्रमाः । युयुधुस्ते तदा दैत्यास्तारकासुरजीविनः

पुनःपुनस्तैश्च तदा बभूवुर्गणैर्जितास्ते ह्यसुराः पराङ्मुखाः ।
बभूव तेषां च तदातिसङ्करो महाभयो दैत्यवरैस्तदानीम् ॥ ४६ ॥
अमृष्यमाणाः परमास्त्रकोविदैस्ततो गणास्ते जयिनो बभूवुः ।
गणैर्जितास्ते ह्यसुराः पराभवं तं तारकं ते व्यथिताः शशंसुः ॥ ४७ ॥
विनाम्य चापं हि तथा च तारकः स योद्धुकामः प्रविवेश सेनाम् ।
यथा झषो वै प्रविवेश सागरं तथा ह्यसौ दैत्यवरो महात्मा ॥ ४८ ॥
गणैः समेतो युयुधे तदानीं स वीरभद्रो हि महाबलश्च ।
सर्वान्सुरांश्चेन्द्रमुखान्महाबलस्तथा गणान्यक्षपिशाचगुह्यकान् ।
स दैत्यवर्योऽतिरुषं प्रविष्टः संमर्दयामास महाबलो हि ॥ ४९ ॥

ततः समभवद्युद्धं देवदानवसङ्कुलम् । देवदानवयक्षाणांसन्निपातकरं महत् ॥ ५० ॥

तथा वृषा गर्जमाना अश्वाश्चघुश्च सादिभिः ।

रथिभिश्च रथाञ्जघ्नुः कुञ्जरान्सादिभिः सह ॥ ५१ ॥
वृषारूढैः सरथैस्ते च सर्वे निष्पाटिता ह्यसुराः पोथिताश्च ॥ ५२ ॥
क्षयं प्रणीता बहवस्तदानीं पेतुः पृथिव्यां निहताश्च केचित् ।
केचित्प्रविष्टा हि रसातलं च पलायमाना बहवस्तथैव ॥ ५३ ॥
केचिच्च शरणं प्राप्ता रुद्रानुचरकिंकरान् । एवं नष्टं तदा सैन्यं विलोक्यासुरपालकः
तारको हि रुषाविष्टो हन्तुं देवगणान्ययौ ॥ ५४ ॥
भुजानामयुतं कृत्वा दैत्यराजो हि तारकः ।
आरुह्य सिंहं सहसा घातयामास तान्रणे ॥ ५५ ॥
दंशितेन च सिंहेन वृषाः केचिद्विदारिताः ।
तथैव तारकेणैव घातिता बहवो गणाः ॥ ५६ ॥
एवं कृतं तदा तेन तारकेण महात्मना । सर्वेषामेव देवानामशक्यस्तारकोमहान्
जातस्तदा महाबाहुस्त्रैलोक्यक्षयकारकः ।
तारकस्यानुगा दैत्या अजेया बलवत्तराः ॥ ५८ ॥
महारूढा दंशिताश्च करालास्ते प्रहारिणः ।
तैराहूता गणाः सर्वे सिंहैश्च वृषभाहताः ॥ ५९ ॥
एवं निहन्यमाना वै गणास्ते रणमण्डले ।
प्रहस्य विष्णुः प्रोवाच कुमारं शिववल्लभम् ॥ ६० ॥

विष्णुरुवाच

नान्यो हन्ताऽस्य पापस्य त्वद्विना कृत्तिकासुत !।
तस्मात्त्वया हि कर्त्तव्यं वचनं च महाभुज !॥ ६१ ॥
तारकस्य वधार्थाय उत्पन्नोऽसि शिवात्मज !।
तस्मात्त्वयैव कर्त्तव्यो निधनन्तारकस्य च ॥ ६२ ॥
तच्छ्रुत्वा भगवान्क्रुद्धः पार्वतीनन्दनो महान् ।
उवाच प्रहसन्वाक्यं विष्णुं प्रति यथोचितम् ॥ ६३ ॥



मया निरीक्ष्यते सम्यक् चित्रयुद्धं महात्मनाम् ।
अनभिज्ञोऽस्म्यहं विष्णो! कार्याकार्यविचारणे ॥ ६४ ॥
केऽस्मदीयाःपरेचैव नजानामि कथंचन । किमर्थंयुध्यमानावै परस्परवधेस्थिताः
कुमारस्य वचः श्रुत्वा नारदो वाक्यमब्रवीत् ॥ ६६ ॥

नारद उवाच

कुमारोऽसि महाबाहो शङ्करस्यांऽशसंभवः ।
त्वं त्राता जगतां स्वामी देवानां च परा गतिः ॥ ६७ ॥
तारकेण पुरा वीरतपस्तप्तंसुदारुणम् । येनैव विजितादेवा येनस्वर्गस्तथाजितः
तपसा तेनचोग्रेणअजेयत्वमवाप्तवान् । अनेनापि जितश्चेन्द्रो लोकपालास्तथैवच
त्रैलोक्यं च जितं सर्वं ह्यनेनैव दुरात्मना ।
तस्मात्त्वया निहन्तव्यस्तारकः पापपूरुषः ॥ ७० ॥
सर्वेषां शं विधातव्यं त्वया नाथेन चाऽद्य वै ।
नारदस्य वचः श्रुत्वा कुमारः प्रहसन्महान् ॥
विमानादवतीर्याऽथ पदातिः परमोऽभवत् ॥ ७१ ॥
पद्भ्यां तदाऽसौ परिधावमानः शिवात्मजोऽयं च कुमाररूपी ।
करे समादाय महाप्रभावां शक्तिं महोल्कामिव दीप्तियुक्ताम् ॥ ७२ ॥
दृष्ट्वा तमायां तमतीव चण्डमव्यक्तरूपं बलिनां वरिष्ठम् ।
दैत्यो बभाषे सुरसत्तमानामसौ कुमारो द्विषतां निहन्ता ॥ ७३ ॥
अनेन सार्द्धं ह्यहमेव वीरो योत्स्यामि सर्वानहमेव वीरान् ।
गणांश्च सर्वानपि घातयामि महेश्वराँल्लोकपालांश्च सद्यः ॥ ७४ ॥
इत्येवमुक्त्वा सततं महाबलः कुमारमुद्दिश्य ययौ च योद्धुम् ।
जग्राह शक्तिं परमाद्भुतां च स तारको वाक्यमिदं बभाषे ॥ ७५ ॥

तारक उवाच

कुमारो मेऽग्रतश्चाऽद्य भवद्भिश्च कथं कृतः । यूयं गतत्रपा देवा येषां राजापुरन्दरः

पुरा येन कृतं कर्मविदितं सर्वमेव तत्। प्रसुप्ताश्चार्द्दिताग र्भेजठरस्थानिपातिताः
कश्यपस्यात्मजेनैव बहुरूपो हतोऽसुरः। नमुचिश्च हतो वीरो वृत्रश्चैव तथा हतः

कुमारं हन्तुकामोऽसौ देवेन्द्रो बलघातकः।
कुमारोऽयं मया देवा घातितोऽद्य न संशयः॥ ७६॥
पुरा हतास्त्वया विप्रा दक्षयज्ञे ह्यनेकशः।
तत्कर्मणः फलं चाऽद्य वीरभद्र! महामते!॥
दर्शयिष्यामि ते वीर! रणे रणविशारद!॥ ८०॥
इत्येघमुक्त्वा स तदा महात्मा दैत्याधिपो वीरवरः स एकः।
जग्राह शक्तिं परमाद्भुतां च स तारको युद्धविदां वरिष्ठः॥ ८१॥
इति परमरुषाभिभूताऽदितितनय परीवृतो ( परम्परा )ऽसुरेन्द्रैः।
युधि मतिमकरोत्तदा निहन्तुं समरविजयी स तारको बलीयान्॥ ८२॥

इति श्रीस्कान्देमहापुराणएकाशीतिसाहस्र्यांसंहितायांप्रथमेमाहेश्वरखण्डे केदारखण्डे शिवशास्त्रेसुरतारकासुरसङ्ग्रामवर्णनंनामैकोनत्रिंशोऽध्यायः॥ २६

---

# त्रिंशोऽध्यायः

## इन्द्रतारकासुरयुद्धवर्णम्

### लोमश उवाच

वल्गमानं त ग्यान्तंतारकासुरमोजसा। आजघान च वज्रेणइन्द्रोमतिमतां वरः

तेन वज्रप्रहारेण तारको विह्वलीकृतः।
पतितोऽपि समुत्थाय शक्त्या तं प्राह रद्द्विपम्॥ २॥

पुरन्दरं गजस्थं हि अपातयत भूतले। हाहाकारो महानासीत्पतिते च पुरन्दरे
तारकेणापि तत्रैव यत्कृतं तच्छृणु प्रभो। पतितं च पदाक्रम्य हस्ताद्वज्रं प्रगृह्य च



हतं देवेन्द्रमालोक्य तारको रिपुसूदनः। वज्रघातेन महताऽताडयत्तु पुरन्दरम्॥

त्रिशूलमुद्यम्य महाबलस्तदा स वीरभद्रो रुषितः पुरन्दरम्।
संरक्षमाणो हि जघान तारकं शूलेन दैत्यं च महाप्रभेण॥ ६॥

शूलप्रहाराभिहतो निपपात महीतले। पतितोऽपि महातेजास्तारकः पुनरुत्थितः

जघान परया शक्त्या वीरभद्रं तदोरसि।
वीरभद्रोऽपि पतितः शक्तिघातेन तस्य वै॥ ८॥

सगणाश्चैव देवाश्च गन्धर्वोरगराक्षसाः। हाहाकारेण महता चुक्रुशुश्च पुनः पुनः

तदोत्थितः सहसा महाबलः स वीरभद्रो द्विषतां निहन्ता।
त्रिशूलमुद्यम्य तडित्प्रकाशं जाज्वल्यमानं प्रभया निरन्तरम्॥
स्वरोचिषा भासितदिग्वितानं सूर्येन्दुबिम्बाग्न्युडुमण्डलाभम्॥१०॥

त्रिशूलेन तदा यावद्धंतुकामोमहाबलः। निवारितः कुमारेणमावधीस्त्वंमहामते

जगर्ज च महातेजाः कार्त्तिकेयो महाबलः॥ १२॥
तदा जयेत्यभिहितो भूतैराकाशसंस्थितैः।
शक्त्या परमया वीरस्तारकं हन्तुमुद्यतः॥ १३॥

तारकस्य कुमारस्य संग्रामस्तत्र दुःसहः। जातस्ततो महाघोरः सर्वभूतभयङ्करः

शक्तिहस्तौ च तौ वीरौ युयुधाते परस्परम्।
शक्तिभ्यां भिन्नहस्तौ तौ महासाहससंयुतौ॥ १५॥
परस्परं वञ्चयन्तौ सिंहाविव महाबलौ।
वैतालिकीं समाश्रित्य तथावै खेचरीं गतिम्॥ १६॥
पार्वतं मतमाश्रित्य शक्त्या शक्तिं निजघ्नतुः।
एभिर्मतैर्महावीरौ चक्रतुर्युद्धमुत्तमम्॥ १७॥
अन्योन्यसाधकौ भूत्वा महाबलपराक्रमौ।
जघ्नतुः शक्तिधाराभी रणे रणविशारदौ॥ १८॥
मूर्ध्नि कण्ठे तथा बाह्वोर्जान्वोश्चैव कटीतटे।

वक्षस्युरसिपृष्ठे च चिच्छिदतुः परस्परम् ॥ १६ ॥
तदा तौ युध्यमानौ च हन्तुकामौ महाबलौ ।
प्रेक्षका ह्यभवन्सर्वे देवगन्धर्वगुह्यकाः ॥ २० ॥
ऊचुः परस्परं सर्वे कोऽस्मिन् युद्धे विजेष्यते ।
तदा नभोगता वाणी उवाच परिसान्त्व्य वै ॥ २१ ॥
तारकं हि सुराश्चाद्य कुमारोऽयं हनिष्यति ।
मा शोच्यतां सुराःसर्वैः सुखेन स्थीयतां दिवि ॥ २२ ॥
श्रुत्वा तदा तां गगने समीरितां तथैव वाचं प्रमथैः परीतः ।
कुमारकस्तं प्रति हन्तुकामो दैत्याधिपं तारकमुग्ररूपम् ॥ २३ ॥
शक्त्या तया महाबाहुराजघान स्तनान्तरे । तारकं ह्यसुरश्रेष्ठं कुमारो बलवत्तरः
तं प्रहारमनादृत्य तारको दैत्यपुङ्गवः ।
कुमारं चाऽपि संक्रुद्धः स्वशक्त्या चाजघान वै ॥ २५ ॥
तेनशक्तिप्रहारेणशाङ्करिर्मूर्च्छितोऽभवत् । मुहूर्ताच्चेतनांप्राप्तःस्तूयमानोमहर्षिभिः
यथा सिंहो मदोन्मत्तो हन्तुकामस्तथैव च ।
कुमारस्तारकं दैत्यमाजघान प्रतापवान् ॥ २७ ॥
एवं परस्परेणैव कुमारश्चैव तारकः । युयुधातेऽति संरब्धौ शक्तियुद्धपरायणौ
अभ्यासपरमावास्तामन्योन्यविजिगीषया ।
तथा तौ युद्धमानौ च चित्ररूपौ तपस्विनौ ॥ २६ ॥
धाराभिश्च अणीभिश्च सुप्रयुक्तौ च जघ्नतुः ।
अवलोकपराः सर्वे देवगन्धर्वकिन्नराः ॥ ३० ॥
विस्मयं परमं प्राप्ता नोचुः किञ्चन तस्य वै ।
न ववौ च तदा वायुर्निष्प्रभोऽभूद्‌ दिवाकरः ॥ ३१ ॥
हिमालयोऽथ मेरुश्च श्वेतकूटश्च दर्दुरः । मलयोऽथ महाशैलोमैनाकोविन्ध्यपर्वतः
लोकालोको महाशैलो मानसोत्तरपर्वतः ।



कैलासो मन्दरो माल्यो गन्धमादन एव च ॥ ३३ ॥
उदयाद्रिर्महेन्द्रश्च तथैवास्तगिरिर्महान् ॥ ३४ ॥
एते चान्ये च बहवःपर्वताश्चमहाप्रभाः । स्नेहार्द्रितास्तदाजग्मुःकुमारंचपरीप्सवः
ततः स दृष्ट्वा तान्सर्वान्भयभीतांश्च शाङ्करिः ।
पर्वतान् गिरिजा पुत्रो बभाषे प्रति बोधयन् ॥ ३६ ॥

कुमार उवाच

मा खिद्यत महाभागा! मा चिन्ता क्रियतां नगाः ।
घातयाम्यद्य पापिष्ठं सर्वेषामिह पश्यताम् ॥ ३७ ॥
एवं समाश्वास्य तदा मनस्वी तान्पर्वतान्देवगणैः समेतान् ।
प्रणम्य शम्भुं मनसा हरिप्रियः स्वां मातरं चैव नतः कुमारः ॥ ३८ ॥
कार्त्तिकेयस्ततः शक्त्या निचकर्त रिपोः शिरः ।
तच्छिरो निपपातोर्व्यां तारकस्य च तत्क्षणात् ॥
एवं स जयमापेदे कार्त्तिकेयो महाप्रभुः ॥ ३६ ॥
ददृशुस्तं सुरगणा ऋषयो गुह्यकाः खगाः ।
किन्नराश्चारणाः सर्पास्तथा चैवाप्सरोगणाः ॥ ४० ॥
हर्षेण महताविष्टास्तुष्टुवुस्तं कुमारकम् । विद्याधर्यश्च ननृतुर्गायकाश्चजगुस्तदा
एवं विजयमापन्नं दृष्ट्वा सर्वे मुदायुताः ।
ततो हर्षात्समागम्य स्वाङ्कमारोप्य चात्मजम् ॥ ४२ ॥
परिष्वज्य तु गाढेन गिरिजाऽपि तुतोष वै ।
स्वोत्सङ्गे च समारोप्य कुमारं सूर्यवर्चसम् ॥ ४३ ॥
लालयामास तन्वङ्गी पार्वती रुचिरेक्षणा ।
ऋषिभिः सत्कृतः शम्भुः पार्वत्या सहितस्तदा ॥ ४४ ॥
आर्यासनगता साध्वी शुशुभे मितभाषिणी ।
संस्तूयमाना मुनिभिः सिद्धचारणपन्नगैः ॥ ४५ ॥

नीराजिता तदा देवैःपार्वती शम्भुना सह । कुमारेणसहैवाथशोभमानातदासती
हिमालयस्तदागत्य पुत्रैश्च परिवारितः । मेर्वाद्यैः पर्वतैश्चैव स्तूयमानपरोऽभवत्
तदा देवगणाः सर्व इन्द्राद्या ऋषिभिः सह । पुष्पवर्षेण महता ववर्षु रमितद्युतिम्

कुमारमग्रतः कृत्वा नीराजनपरा बभुः ॥ ४८ ॥
गीतवादित्रघोषेण ब्रह्मघोषेण भूयसा ।
संस्तूयमानो विविधैः सूक्तैर्वेदविदां वरैः ॥ ४६ ॥

कुमारविजयंनाम चरित्रं परमाद्भुतम् । सर्वपापहरं दिव्यं सर्वकामप्रदं नृणाम् ॥

ये कीर्त्तयन्ति शुचयोऽमितभाग्ययुक्ताश्चानंत्यरूपमजरामरमादधानाः ।
कौमारविक्रममहात्म्यमुदारमेतदानन्ददायकमनोरथकरं नृणा हि ॥५१
यः पठेच्छृणुयाद्वाऽपि कुमारस्य महात्मनः ।
चरितं तारकाख्यं च सर्वपापैः स मुच्यते ॥ ५२ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखण्डे शिवशास्त्रे तारकासुरवधपूर्वकं स्वामिकार्त्तिकेय विजयोत्सववर्णनं नामत्रिंशोऽध्यायः ॥ ३० ॥

---

## एकत्रिंशोऽध्यायः

### तारकवधानन्तरं देवैःसहयमस्यशङ्करम्प्रतिगमनम्

**शौनक उवाच**

हत्वा त्वं तारकंसङ्ख्ये कुमारेणमहात्मना । किं कृतं सुमहद्विप्र तत्सर्ववक्तुमर्हसि
कुमारो ह्यपरः शंभुर्येन सर्वमिदं ततम् । तपसा तोषितः शम्भुर्ददाति परमं पदम्॥

कुमारो दर्शनात्सद्यः सफलो हि नृणां सदा ।
ये पापिनो ह्यधर्म्मिष्ठाः श्वपचा अपि लोमश !।



दर्शनाद्धूतपापास्ते भवन्त्येव न संशयः ॥ ३ ॥
शौनकस्य वचः श्रुत्वा उवाच चरितं तदा ।
व्यासशिष्यो महाप्राज्ञः कुमारस्य महात्मनः ॥ ४ ॥

**लोमश उवाच**

हत्वा तं तारकं सङ्ख्ये देवानामजयं ततः ।
अवध्यं च द्विजश्रेष्ठाः कुमारो जयमाप्तवान् ॥ ५ ॥

महिमा हि कुमारस्य सर्वशास्त्रेषु कथ्यते । वेदैश्च स्वागमैश्चापिपुराणैश्चतथैवच
तथोपनिषदैश्चैव मीमांसाद्वितयेन तु । एवंभूतः कुमारोऽयमशक्यो वर्णितुं द्विजाः

यो हि दर्शन मात्रेण पुनाति सकलं जगत् ।
त्रातरं भुवनस्याऽस्य निशम्य पितृराट् स्वयम् ॥ ८ ॥
ब्रह्माणं च पुरस्कृत्य विष्णुं चैव सवासवम् ।
स ययौ त्वरिते नैव शङ्करं लोकशङ्करम् ॥
तुष्टाव प्रयतो भूत्वा दक्षिणाशापतिः स्वयम् ॥ ६ ॥

नमो भर्गाय देवाय देवानां पतये नमः । मृत्युञ्जयाय रुद्राय ईशानाय कपर्द्दिने ॥१०
नीलकण्ठाय शर्वाय व्योमावयवरूपिणे । कालाय कालनाथाय कालरूपायवैनमः

यमेन स्तूयमानो हि उवाच प्रभुरीश्वरः ।
किमर्थमागतोऽसि त्वं तत्सर्वं कथयस्व नः ॥ १२ ॥

**यम उवाच**

श्रूयतां देवदेवेश वाक्यं वाक्यविशारद । तपसा परमेणैव तुष्टिं प्राप्तोऽसिशङ्कर !
कर्मणा परमेणैव ब्रह्मा लोकपितामहः । तुष्टिमेतिन सन्देहो वराणांहि सदा प्रभुः
तथा विष्णुर्हि भगवान्वेदवेद्यः सनातनः । यज्ञैरनेकैः संतुष्ट उपवासव्रतैस्तथा ॥

ददाति केवलं भावं येन कैवल्यमाप्नुयुः ।
नराः सर्वे मम मतं नान्यथा हि वचो मम ॥ १६ ॥
ददाति तुष्टो वै भोगं तथा स्वर्गादि सम्पदः ।

सूर्यो नमस्यया ऽऽरोग्यं ददातीह नचान्यथा ॥ १७ ॥
गणेशो हि महादेव! अर्घ्यपद्यादिवन्दनैः ।
मन्त्रावृत्त्या तथा शम्भो! निर्विघ्नं च करिष्यति ॥ १८ ॥
तथान्ये लोकपाः सर्वे यथाशक्त्या फलप्रदाः ।
यज्ञाध्ययनदानाद्यैः परितुष्टाश्च शङ्कर !॥ १९ ॥
महदाश्चर्यसम्भूतं सर्वेषां प्राणिनामिह । कृतं च तव पुत्रेण स्वर्गद्वारमपावृतम् ॥
दर्शनाच्च कुमारस्य सर्वे स्वर्गौकसो नराः ।
पापिनोऽपि महादेव! जाता नास्त्यत्र संशयः ॥ २१ ॥
मया किं क्रियतां देव! कार्याकार्यव्यवस्थितौ ।
ये सत्यशीलाः शान्ताश्च वदान्यानिरवग्रहाः ॥ २२ ॥
जितेन्द्रिया अलुब्धाश्च कामरागविवर्जिताः ।
याज्ञिका धर्मनिष्ठाश्च वेदवेदाङ्गपारगाः ॥ २३ ॥
यां गतिं यांति वै शम्भो! सर्वे सुकृतिनोऽपि हि ।
तां गतिं दर्शनात्सर्वे श्वपचा अधमा अपि ॥ २४ ॥
कुमारस्य च देवेशमहदाश्चर्यकर्मणः । कार्त्तिक्यांकृत्तिकायोगसहितायांशिवस्यच
शिवस्य तनयं दृष्ट्वा ते यान्ति स्वकुलैः सह ।
कोटिभिर्बहुभिश्चैव मत्स्थानं परिमुच्य वै ॥ २६ ॥
कुमारदर्शनात्सर्वे श्वपचा अपि यान्ति वै ।
सद्गतिं त्वरितेनैव किं क्रियेत मयाऽधुना ॥ २७ ॥
यमस्य वचनं श्रुत्वा शङ्करो वाक्यमब्रवीत् ॥ २८ ॥

शङ्कर उवाच

येषां त्वन्तर्गतं पापं जनानां पुण्यकर्मणाम् ।
विशुद्धभावो भो धर्म्म! तेषां मनसि वर्त्तते ॥ २९ ॥
सत्तीर्थगमनायैव दर्शनार्थं सतामिह । वाञ्छाचमहती तेषां जायतेपूर्वकारिता ॥



बहूनां जन्मनामन्ते मयि भावोऽनुवर्त्तते ।
प्राणिनां सर्वभावेन जन्माभ्यासेन भो यम !॥ ३१ ॥
तस्मात्सुकृतिनः सर्वे येषां भावोऽनुवर्त्तते ।
जन्मजन्मानुवृत्तानां विस्मयं नैव कारयेत् ॥ ३२ ॥
स्त्रीबालशूद्राः श्वपचाधमाश्च प्राग्जन्मसंस्कारवशाद्धि धर्म्म ! ।
योनिं गताः पापिषु वर्त्तमानास्तथाऽपि शुद्धा मनुजा भवन्ति ॥ ३३॥
तथाहितेनमहता विभवन्ति सर्वे ये येषु येषु विषयेषु भवन्तितज्ज्ञाः
दैवेन पूर्वचरितेन भवन्ति सर्वे सुरासुरालोकपतिप्रमुख्याः ॥
जाता ह्यमी भूतगणाश्च सर्वे ह्यमी च येवैऋषयो देवताश्च ॥ ३५ ॥
विस्मयो नैव कर्त्तव्यस्त्वया वाऽपि कुमारके । कुमारदर्शने चैवधर्मराजनिबोधमे
वचनं कर्मसंयुक्तं सर्वेषां फलदायकम् ।
सर्वतीर्थानि यज्ञाश्च दानानि विविधानि च ॥
कार्याणि मनःशुद्ध्यर्थं नात्र कार्या विचारणा ॥ ३७ ॥
मनसा भावितोह्यात्मा आत्मनात्मानमेव च ।
आत्मा अहं च सर्वेषां प्राणिनां हि व्यवस्थितः ॥ ३८ ॥
अहं सदाभावयुक्तआत्मसंस्थोनिरन्तरः । जंगमाजंगमानां च सत्यंप्रतिवदामिते
द्वन्द्वातीतो निर्विकल्पो हि साक्षात्स्वस्थो नित्यो नित्ययुक्तो निरीहः
कूटस्थो वै कल्पभेदप्रवादैर्बहिष्कृतो बोधबोध्यो ह्यनन्तः ॥ ४० ॥
विस्मृत्य चैनं स्वात्मानं केवलं बोधलक्षणम् ।
संसारिणो हि दृश्यन्ते समस्ता जीवराशयः ॥ ४१ ॥
अहं ब्रह्मा च विष्णुश्च त्रयोऽमी गुणकारिणः ।
सृष्टिपालनसंहारकारका नान्यथा भवेत् ॥ ४२ ॥
अहङ्कारवृतेनैव कर्मणा कारितावयम् । यूयं च सर्वे विबुधा मनुष्याश्च खगादयः
पश्वादयः पृथग्भूतास्तथान्ये बहवोह्यमी । पृथक्पृथक्समीचीनागुणवन्तश्चसंसृतौ

पतिता मृगतृष्णायां मायया च वशीकृताः ।
वयं सर्वे च विबुधाः प्राज्ञाः पण्डितमानिनः ॥ ४५ ॥
परस्परं दूषयन्तो मिथ्यावादरताः खलाः ॥ ४६ ॥
त्रैगुणभवसंपन्ना अतत्त्वज्ञाश्च रागिणः । कामक्रोधभयद्वेषमदमात्सर्यसंयुताः ॥
परस्परं दूषयन्तो ह्यतत्त्वज्ञा बहिर्मुखाः । तस्मादेवं विदित्वाथ असत्यंगुणभेदतः
गुणातीते च वस्त्वर्थे परमार्थैकदर्शनम् ॥ ४९ ॥
यस्मिन्भेदोह्यभेदं च यस्मिन्नागो विरागताम् ।
क्रोधो ह्यक्रोधतां याति तद्धाम परमं शृणु ॥ ५० ॥
न तद्भासयते शब्दः कृतकत्वाद्यथाघटः । शब्दो हि जायते धर्म्मः प्रवृत्तिपरमोयतः
प्रवृत्तिश्च निवृत्तिश्च तथा द्वन्द्वानि सर्वशः ।
विलयं यांति यत्रैव तत्स्थानं शाश्वतं मतम् ॥ ५२ ॥
निरंतरं निर्गुणं ज्ञप्तिमात्रं निरंजनं निर्विकारं निरीहम् ॥
सत्तामात्रं ज्ञानगम्यं स्वसिद्धं स्वयंप्रभं सुप्रभं बोधगम्यम् ॥ ५३ ॥
एतज्ज्ञानं ज्ञानविदो वदन्ति सर्वात्मभावेन निरीक्षयन्ति ।
सर्वातीतं ज्ञानगम्यं विदित्वा येन स्वस्थाः समबुद्धया चरन्ति ॥ ५४ ॥
अतीत्य संसारमनादिमूलं मायामयं मायया दुर्विचार्यम् ।
मायां त्यक्त्वा निर्ममा वीतरागा गच्छन्ति ते प्रेतराण्निर्विकल्पम् ॥
संसृतिः कल्पनामूलं कल्पना ह्यमृतोपमा ।
यैः कल्पना परित्यक्ता ते यान्ति परमां गतिम् ॥ ५६ ॥
शुक्त्यां रजतबुद्धिश्च रज्जुबुद्धिर्यथोरगे ।
मरीचौ जलबुद्धिश्च मिथ्यामिथ्यैव नान्यथा ॥ ५७ ॥
सिद्धिः स्वच्छन्दवर्त्तित्वं पारतन्त्र्यं हि वै मृषा ।
बद्धो हि परतन्त्राख्यो मुक्तः स्वातन्त्र्यभावनः ॥ ५८ ॥
एकोह्यात्मा विदित्वाऽथ निर्ममोनिरवग्रहः । कुतस्तेषां बंधनंचयथाखेपुष्पमेव च



शशविषाणमेवैतज्ज्ञानं संसार एव च । किं कार्यं बहुनोक्तेन वचसा निष्फलेन हि
ममतां च निराकृत्य प्राप्तुकामाः परंपदम् ।
ज्ञानिनस्ते हि विद्वांसो वीतरागा जितेन्द्रियाः ॥ ६१ ॥
यैस्त्यक्तो ममताभावो लोभकोपौ निराकृतौ ।
ते यांति परमं स्थानं कामक्रोधविवर्जिताः ॥ ६२ ॥
यावत्कामश्च लोभश्च रागद्वेषौ व्यवस्थितौ ।
नाप्नुवन्ति च तां सिद्धिं शब्दमात्रैकबोधकाः ॥ ६३ ॥

यम उवाच

शब्दाच्छब्दः प्रवर्त्तेत निःशब्दं ज्ञानमेव च ।
अनित्यत्वं हि शब्दस्य कथं प्रोक्तं त्वया प्रभो !॥ ६४ ॥
अक्षरं ब्रह्म परमं शब्दो वै ह्यक्षरात्मकः ।
तस्माच्छब्दस्त्वया प्रोक्तो निरीक्षक इति श्रुतम् ॥ ६५ ॥
प्रतिपाद्यं हि यत्किञ्चिच्छब्देनैव विना कथम् ।
तत्सर्वं कथ्यतां शम्भो! कार्याकार्यव्यवस्थितौ ॥ ६६ ॥

शङ्कर उवाच

शृणुष्वावहितो भूत्वा परमार्थयुतं वचः । यस्य श्रवणमात्रेण ज्ञातव्यंनावशिष्यते
ज्ञानप्रवादिनः सर्व ऋषयो वीतकल्मषाः । ज्ञानाभ्यासेनवर्ततेज्ञानंज्ञानविदोविदुः
ज्ञानं ज्ञेयं ज्ञानगम्यं ज्ञात्वा च परिगीयते ।
कथं केन च ज्ञातव्यं किं तद्वक्तुं विवक्षितम् ॥ ६९ ॥
एतत्सर्वं समासेन कथयामि निबोध मे । एको ह्यनेकधा चैव दृश्यते भेदभावनः
यथा भ्रामरिकादृष्ट्या भ्राम्यते च मही यम !।
तथात्मा भेदबुद्ध्या च प्रतिभाति ह्यनेकधा ॥ ७१ ॥
तस्माद्विमृश्य तेनैष ज्ञातव्यः श्रवणेन च । मन्तव्यः सुप्रयोगेण मननेन विशेषतः ॥
निर्द्धार्य चात्मनात्मानं सुखं बन्धात्प्रमुच्यते ।

मायाजालमिदं सर्वं जगदेतच्चराचरम् ॥ ७३ ॥
मायामयोऽयं संसारो ममतालक्षणो महान् ।
ममतां च बहिः कृत्वा सुखं बंधात्प्रमुच्यते ॥ ७४ ॥
कोऽहंकस्त्वंकुतश्चान्येमहामायावलम्बिनः ।अजागलस्तनस्येवप्रपञ्चोऽयंनिरर्थकः
निष्फलोऽयं निराभासो निःसारो धूमडम्बरः ।
तस्मात्सर्वप्रयत्नेन आत्मानं स्मर वै यम !॥ ७६ ॥

लोमश उवाच

एवंप्रचोदितस्तेनशंभुनाप्रेतराट्स्वयम् । बुद्धोभूत्वायमःसाक्षादात्मभूतोऽभवत्तदा
कर्मणां हि च सर्वेषां शास्ता कर्मानुसारतः ।
बभूव डम्बरो नृणां भूतानां च समाहितः ॥ ७८ ॥

ऋषय ऊचुः

हत्वा तु तारकं युद्धे कुमारेण महात्मना । अतऊर्ध्वं कथ्यतांभोकिं कृतंमहदद्भुतम्

सूत उवाच

हते तु तारके दैत्ये हिमवत्प्रमुखाद्रयः । कार्त्तिकेयं समागत्य गीर्भीरम्याभिरैडयन्
( तारकंघातितं सर्वेदेवाःसवासवाः । तुष्टुवुर्मुदिताःसर्वे शाङ्करिं लोकपावनम् )

देवा ऊचुः

नमःकल्याणरूपायनमस्ते विश्वमङ्गल !! विश्वबन्धोनमस्तेऽस्तुनमस्तेविश्वभावन
वरिष्ठाः श्वपचा येन कृता वै दर्शनात्त्वया ।
त्वां नमामो जगद्बन्धुं त्वां वयं शरणागताः ॥ ८२ ॥
( नमोदेववरैःपूज्य नमोज्ञानविदाम्वर! ।
स्तोत्रं निशम्य देवानां गिरयोऽपि मुदान्विताः ॥
तुष्टुवुःसर्वभावेन गिरिजानन्दनं तदा ।

गिरय ऊचुः

त्वं नाथोऽसिह्यनाथानां शङ्करात्मजते नमः )
नमस्ते पार्वतीपुत्र! शङ्करात्मजते नमः । नमस्ते कृत्तिकासूतो अग्निभूत नमोऽस्तुते



नमोऽस्तु ते देववरैः सुपूज्य नमोऽस्तु ते ज्ञानविदां वरिष्ठ! ।
नमोऽस्तु ते देववर प्रसीद शरण्य सर्वार्तिविनाशदक्ष! ॥ ८४ ॥
एवं स्तुतो हि गिरिभिःकार्त्तिकेयो ह्युमासुतः ।
तान्गिरीन्सुप्रसन्नात्मा वरं दातुं समुत्सुकः ॥ ८५ ॥

कार्त्तिकेय उवाच

भो भोगिरिवरा! यूयं शृणुध्वं मद्वचोऽधुना ।
कर्मिभिर्ज्ञानिभिश्चैव सेव्यमानाभविष्यथ ॥ ८६ ॥
भवत्स्वेवहिवर्त्तन्तेदृषदो यज्ञसेविताः । पुनन्तु विश्वं वचनान्मम ता नात्र संशयः
पर्वतीयानि तीर्थानि भविष्यन्ति न चान्यथा ।
शिवालयानि दिव्यानि दिव्यान्यायतनानि च ॥ ८८ ॥
अयनानि विचित्राणि शोभनानि महान्ति च ।
भविष्यन्ति न सन्देहः पर्वता! वचनान्मम ॥ ८९ ॥
योऽयं मातामहो मेऽद्य हिमवान्पर्वतोत्तमः ।
तपस्विनां महाभागः फलदो हि भविष्यति ॥ ९० ॥
मेरुश्चगिरिराजोऽयमाश्रयोहिभविष्यति । लोकालोकोगिरिवरउदयाद्रिर्महायशाः
लिङ्गरूपो हि भगवान्भविष्यति न चान्यथा ।
श्रीशैलो हि महेन्द्रश्च तथा सह्याचलो गिरिः ॥ ९२ ॥
माल्यवान्मलयो विन्ध्यस्तथाऽसौ गन्धमादनः ।
श्वेतकूटस्त्रिकूटो हि तथादर्दुरपर्वतः ॥ ९३ ॥
एते चान्ये चबहवः पर्वतालिङ्गरूपिणः । ममवाक्याद्भविष्यन्ति पापक्षयकराह्यमी
एवंवरंददौ तेभ्यः पर्वतेभ्यश्चशाङ्करिः । ततो नन्दीयुवाचाऽथ सर्वागमपुरस्कृतम्

नन्द्युवाच

त्वया कृता हि गिरयो लिङ्गरूपिण एव ते ।
शिवालयाः कथं नाथ! पूज्याःस्युः सर्वदैवतैः ॥ ९६ ॥

